# ग्रन्थकर्तुः प्रशस्तिः ।

श्रीसातवाहनकुलाम्बुधिपारिजातः सङ्ग्रामराज इति भूमिपतिर्बभूव ।
येनावतीर्य विविधैर्विबुधैः श्रितेन कश्मीरमण्डलमनीयत नन्दनत्वम् ॥ १

तस्यात्मजो नमदशेषमहीशमौलिमाणिक्यकायनिकषीकृतपादपीठः ।
श्रीमाननन्त इति तत्कुलकल्पवृक्षः शौर्यैकराशिरुदपद्यत चक्रवर्ती ॥ २

द्वाराग्रसीमनि च यस्य निकृत्तकण्ठः क्षिप्त्वोदरं नरपतेर्लुठति स्म मूर्धा ।
सेवागतो जितमहाहरिचक्रचारुकीर्तिश्रवेण परितोषमिवैत्य राहुः ॥ ३

सोऽथ त्रिगर्ताधिपतेस्तनूजां राजेन्दुरिन्दोर्वहति स्म देवीम् ।
तमोपहां सूर्यवती प्रजानां विभातसंध्यामिव विश्ववन्द्याम् ॥ ४

आम्नायैरिव नानादेशसमुद्भूतविप्रशतसेव्यैः ।
अब्धिमिरिव रत्नभृतैर्भीतिभृतां भूभृतामपि शरण्यैः ॥ ५

कल्पद्रुमैरिवान्वहमाशोपगतार्तिहारिभिरुदारैः ।
देव्या यया विरचितैः कश्मीरा मण्डिता मठप्रवरैः ॥ ६

यन्निर्मितान्यमलतोयवहद्वितस्ताविस्तीर्णतीरभुवि सौधसुधासितानि ।
व्योमापगापरिगतान्तहिमाद्रिशृङ्गभङ्गिं भजन्ति सुतरां सुरमन्दिराणि ॥ ७

दत्तैरसंख्यमणिहेममहाग्रहारकृष्णाजिनद्रविणपर्वतगोसहस्रैः ।
विश्वंभरा·········न च नापि भू······विश्वं सदा भगवती किल या बिभर्ति ॥ ८

क्ष्मामण्डलैकतिलकोऽप्यनलीकलग्नो यस्या घनामृतमयो गुणिबान्धवोऽपि ।
विद्वेषिपर्वदशिवोऽपि शिवावतारः श्रीमान्सुतः कलशदेव इति क्षितीशः ॥ ९

उर्वीभृतो नमयितुं निखिलानुदग्रान्पातुं क्षमश्च जलधीनपि सप्त धीरः ।
सृष्टः सुरैरभिनवः कलशोद्भवो यः श्रीहर्षदेव इति नृपवरः स यस्याः ॥ १०

तस्याः सदैव गिरिशार्चनहोमकर्मनानाप्रदानविधिबद्धसमुद्यमायाः ।
शास्त्रेषु नित्यविहितश्रवणश्रमाया देव्याः क्षणं किमपि चित्तविनोदहेतोः ॥ ११

नानाकथामृतमयस्य बृहत्कथायाः सारस्य सज्जनमनोम्बुधिपूर्णचन्द्रः ।
सोमेन विप्रवरभूरिगुणाभिरामरामात्मजेन विहितः खलु संग्रहोऽयम् ॥ १२

प्रविततरङ्गभङ्गिः कथासरित्सागरो विरचितोऽयम् ॥
सोमेनामलमतिना हृदयानन्दाय भवतु सताम् । १३